# श्रीकिरातशास्तुः अष्टोत्तरशतनामस्तोत्रम्

{॥ श्रीकिरातशास्तुः अष्टोत्तरशतनामस्तोत्रम् ॥}

किरातात्मा शिवः शान्त शिवात्मा शिवनन्दनः ।

पुराणपुरुषोधन्वी पुरुहुत सहायकृत् ॥ १

नीलाम्बरो महाबाहुर्वीर्यवान् विजयप्रदः ।

विधुमौलि र्विराडात्मा विश्वात्मा वीर्यमोहनः ॥ २

वरदो वामदेवश्च वासुदेवप्रियो विभुः ।

केयूरवान् पिञ्छमौलिः पिङ्गलाक्षः कृपाणवान् ॥ ३

शास्वतः शरकोदण्डी शरणागतवत्सलः ।

श्यामलाङ्गः शरधीमान् शरदिन्दु निभाननः ॥ ४

पीनकन्ठो विरूपाक्षः क्षुद्रहा क्षुरिकायुधः ।

धाराधर वपुर्धीमान् सत्यसन्धः प्रतापवान् ॥ ५

कैरातपतिराखेटप्रियः प्रीतिप्रदः प्रभुः ।

रेणुकात्मज श्रीराम चित्तपत्मालयो बली ॥ ६

व्याधरूपधरो व्याधिनाशनः कालशासनः ।

कामदेवसमो देवः कामितार्थ फलप्रदः ॥ ७

अभृतः स्वभृतो धीरः सारः सात्विकसत्तमः ।
सामवेदप्रियो वेधाः वेदो वेदविदांवरः ॥ ८

त्र्यक्षरात्मा त्रिलोकेशः त्रिस्वरात्मा त्रिलोचनः ।
त्रिगुणात्मा त्रिकालज्ञः त्रिमूर्त्यात्मा त्रिवर्गदः ॥ ९

पार्वतीनन्दनः श्रीमान् पावनः पापनाशनः ।
पारावारगभीरात्मा परमात्मा परात्परः ॥ १०

गीतप्रियो गीतकीर्तिः कार्तिकेयसहोदरः ।
कारुण्यसागरो हंसः सिद्ध सिम्हपराक्रमः ॥ ११

सुश्लोकः सुमुखो वीरः सुन्दरः सुरवन्दितः ।
सुरवैरिकुलध्वंसी स्थूलश्मश्रुरमित्रहा ॥ १२

अमृतः सर्वगः सूक्ष्म स्थूलस्तुरगवाहनः ।
अमलो विमलो दक्षो वसुमान् वनगो गुरुः ॥ १३

सर्वप्रियः सर्वसाक्षी सर्वयोगीश्वरेश्वरः
तारक ब्रह्मरूपी च चन्द्रिकाविशदस्मितः

किरात वपुरारामसञ्चारी परमेश्वरः ॥ १४

इति श्री किरातशास्तुः अष्टोत्तरशतनामस्तोत्रं सम्पूर्णं ॥

Encoded and proofread by Antaratma antaratma at Safe-mail.net

Please send corrections to sanskrit@cheerful.com

Last updated त्oday

http://sanskritdocuments.org